ॐ द्रुपदा दिव मुमुचान ऽ स्विन्न ऽ स्नातो मलादिव। पूतम्पवित्रेण वाज्य मां ÷ शुन्धन्तु मैनसऽ ॥ * इति मन्त्रान्ते उन्मज्ज्य जलाद्बहिर्निर्गच्छन् जलाञ्जलिमेकं तटे निक्षिपेत्। तत्र मन्त्रः। यन्मया दूषितं तोयं शारीरमलसम्भवात्। तस्य पापस्य शुध्यर्थं यक्ष्म'णं तर्पयाम्यहम् ॥इति। ततो जलाद्बहिरागत्य धौते वाससी परिधाय भस्मधारणमाचमनं प्राणायामञ्च कृत्वा गृहं व्रजेत्। इति नद्यादौ प्रातःस्नानविधिः॥

तीर्थमां नित्य प्रातःस्नाननो प्रकार.

हवे नद्यादि तीर्थमां प्रातःस्नाननो विधि–अरुणोदयनी वेळाए भस्म, धोईने सुकवेला कपासना के रेशमना वस्त्रो, अथवा कामळी, ऊर्णावस्त्रना अंदर वींटी मुकेला; तथा लोटो विगेरे पात्र संध्यादि कर्मोपयोगी जल लाववा माटे, दर्भ दूर्वा विगेरे उपयुक्त वस्तुओ अनुकूलता प्रमाणे लई तीर्थना कांठे जवुं. अने पवित्र स्थळ उपर सर्व वस्तुओ मुकी प्रथम हाथ पग धोइ जलाशयमां उतरी मलापकर्षण स्नान करी शरीर स्वच्छ करवुं. पछी शिखा बांधी यज्ञोपवीत सव्य राखी आचमन करी संकल्प करवो. ते आ प्रमाणेः–ॐ केशवाय० इत्यादि त्रण मंत्र वडे त्रण वखत जमणा हथेळीमां हृदय सुधी जई शके एटलुं पाणी लई पीवुं अने ॐ गोविंदायनमः आ मंत्र बोली हाथ धोइ नाखी, फरी जमणा हाथमां पाणी लईने " विष्णु र्विष्णु र्विष्णुः "

अहींथी " करिष्ये " सुधी बोलीने सकल्प मुकवो. पछी प्रवाह तरफ, पूर्व दिशा तरफ, अथवा उत्तर दिशा तरफ मुख राखी अधोमुख अन्जलि वडे तीर्थनु अभिमन्त्रण करवु ॐ उरुऽहि- राजा० पाशः — ॥ १ ॥ आ मत्र बोली तीर्थनु अभिमन्त्रण कर्या पछी त्रण वरात निमज्जन करी ( डबकीयोऽरी ) दूर्वा दर्भ अथवा आगळीओना अग्र वडे पाणी लई मस्तक उपर मार्जन करवु. मार्जन करती वेळाए बोलवाना मत्रो —ॐ आपो हिष्ठा० यथाचन ऽ ॥ ३ ॥ * पछी पाणीमा डुबी रहीनें अथवा श्वासोच्छ्‌वास न थाय तेवी रीते ( नासिकान्त ) डुबीनें अघमर्षण करवु तेनो मत्र —ॐ द्रुपदादिव० नंस ऽ ॥ आ मन्त्र मनमा बोली डुबेला होईए तो उन्मज्जन करी, जला शयना बहार आवता एक अजली पाणी काठे नाखवु तेनो मन्त्र —य-मयाद० म्यहम् ॥ पछी पाणीमाथी बहार आवी, शरीर कोरु करी, धौत वस्त्र धारण करी भस्मधारण, आचमन, अने प्राणायाम करी घेर जवु ( सध्योपासना जलाशय उपर करवी होय, अने प्रथमथीज तेवी तैयारी राखी होय तो ते करवा हरकत नथी ) आ प्रमाणे नद्यादि जलाशय के तीर्थ उपर प्रात स्नान करवानो विधि समजवो.

---

## प्रकरण ५ मुं.

॥ अथ गृहे नित्यस्नानविधिः ॥ शुद्धपात्रे शीतोदकमादाय तत्रोष्णोदकं यथेच्छं निक्षिप्य प्राङ्मुख उदङ्मुखो वा काष्ठफलकाद्यासन उपविश्य हस्तपादौ प्रक्षाल्य गण्डूपत्रयं कृत्वा पादत आरभ्यामस्तकान्तं मलापकर्षणस्नानं विधाय पूर्ववत् संकल्पं कुर्यात् " अत्र संकल्पे " तीर्थे " इत्यस्य स्थाने " गृहे " इति वक्तव्यम् । तथा च गृहेस्नाने कर्तव्ये तीर्थाभिमन्त्रणमार्जनाघमर्षणयक्ष्मतर्पणानां लोपः " संकल्पान्ते स्नानीयोदके तीर्थभावनां तीर्थस्मरणञ्च कुर्यात् । तद्यथा ।

घेर नित्य प्रात:स्नाननो विधि.

त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता ।
याचितं देहि मे तीर्थं तीर्थराज नमोस्तु ते ॥

नमामि गङ्गे तव पादपङ्कजं--सुरासुरै र्वन्दित दिव्यरूपम्।
भुक्तिञ्च मुक्तिञ्च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥

पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ।
आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

नन्दिनी नलिनी सीता मालती च मलापहा ।
विष्णुपादाब्जसम्भूता गङ्गा त्रिपथगामिनी ।
भागीरथी भोगवती जान्हवी त्रिदशेश्वरी ॥
द्वादशैतानि नामानि यत्र यत्र जलाशये ।
स्नानोद्यत पठेत्तत्र गङ्गास्नानफलं भवेत् ॥

इति मन्त्रान् पठन् स्नात्वा शरीरं प्रमृज्य वासो धारणादि कुर्यात् । इति गृहे नित्यस्नानविधि ॥

हवे घरमाज नित्यनो प्रातःस्नान विधि । स्वच्छ अने पवित्र

घेर नित्यस्नान करवु हाय त्यारे विधि

एवा ताबाना, पितळना, के बीजा एवाज पात्रमा प्रथम थडु पाणी लई, तेमा पोताना मर्जी प्रमाणे उष्णोदक उमेरवु, अने पूर्व अथवा उत्तर दिशा तरफ मुख राखी पाटला विगेरे आसन उपर बेसीने हाथ पग धोई, पोतानी डाबी बाजू तरफ त्रण कोगळा नाखी, पगथी आरमी मस्तक सुधी प्रथम पाणी लई ' मलापकर्षण " (एटले शरीरनोमल दूर करवा माटे विहित एवु) स्नान करी, कर्म करवानो अधिकार प्राप्त थवा माटे तथा जोइती पवित्रता प्राप्त थवा माटे पूर्व दस्या प्रमाणे " विष्णु र्विष्णु र्विष्णुः " अहींथी आरमी " करिष्ये " सुधी बोलीने सकल्प मुकवो सन्कल्पमा ' तीर्थे प्रातःस्नानं एना बदले गृहे प्रात स्नानं एवु बोल्वु तेमज घेर स्नान करती वखते " तीर्थलुं अभिमन्त्रण, मार्जन, अधमर्षण अने यक्ष्मतर्पण" एटली बाबतोनो लोपकरवो

संकल्प थया पछी स्नान करवा माटे लीधेला जलने विशे तीर्थ भावना करवी तथा तीर्थोनुं स्मरण पण करवुं. ते आ प्रमाणेः—

त्वं राजा सर्व० इत्ये ॥ ६ ॥ आ मंत्र बोलतां बोलतां स्नान करी शरीर लुछी नांखी वस्त्रधारणादि कृत्यो करवा. आ प्रमाणे घेर नित्य प्रातःस्नान करवानो विधि समजवो.॥

## प्रकरण ६ नुं.

गौणस्नान क्यारे करवुं.

शरीरना अस्वस्थताने लीधे जलस्नान करवा अशक्यता होय तो; प्रातःस्नान कर्या पछी कांई कारणसर जोइती पवित्रता नहीं रही होय त्यारे; तेमज विवाहादिकना प्रसंगे, जनसमूहमां जई आव्या पछी; अने अस्पृश्य माणसनो के पदार्थनो परंपरा संबंध थयो होय त्यारे; योग्य पवित्रता साचववा माटे गौणस्नान करवुं.

आ गौणस्नान करवाथी संध्या जप वेदाभ्यास तथा एवाज बीजा ( असहाय=साधन वगरना ) कर्मो करवा पुरती शुद्धी प्राप्त थाय छे; परंतु श्राद्ध करवाने के श्राद्धमां क्षण लई श्राद्धान्न भोजन करवाने, पूजा, होम वैश्वदेव, तथा एवाज बीजा कर्मो करवाने शुद्धि मळती नथी. आ कर्मो करवा होय तो जलस्नान करवुं.

---

## प्रकरण ७ मुं.

### अथ संध्यादिकर्माधिकारप्राप्त्यर्थमाचमनं भस्मादिधारणञ्च कथ्यते ॥

भस्म रुद्राक्ष धारण प्रकार.

उक्तवद्यथाविधि स्नात्वा धौते वाससी परिधाय कृमिकीटकादि वर्जिते निरुपद्रवे स्थाने दर्भाद्यासनमास्तीर्य प्राङ्मुख उदङ्मुखो वोपविश्याफेनाभिः शीताभिः पूताभिश्चाद्भिः पूर्णकलशमुपपात्रादिसहितं, भस्म, रुद्राक्षमालादि च संपाद्य कर्म समारभेत् ।

तत्रादौ तूष्णीमाचमनं प्राणायामञ्च कृत्वा विश्वंभरं ध्यायन्नन्तःकरणमन्तर्मुखं विधाय वामपाणौ भस्म संस्थाप्योदकेनार्द्रीकृत्य करद्वयेन संमर्द्य त्र्यायुषमिति मंत्रस्य नारायण ऋषिः आग्नी देवता उष्णिकूछन्दः भस्मत्रिपुण्ड्रधारणे विनियोगः

ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषुं त्र्यायुषतन्नोऽअस्तु त्र्यायुषम् ॥ इति मंत्रेण ललाटे अंसे हृदये नाभौ पृष्ठे ग्रीवायां च त्रिपुण्ड्रान् धारयेत् ॥ अथ रुद्राक्षमालां "त्र्यंबक मित्यस्य वशिष्ठ ऋषिः त्र्यंबकोरुद्रो देवता अनुष्टुप्छन्दः रुद्राक्षमालाधारणे विनियोगः

ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्धनम् । उर्व्वारुकमिव बन्धना न्मृत्योर्मुक्षीय मामृतात् ॥ " इति मंत्रेणाभिमन्त्र्य धारयेत् । ततः शुद्ध्यर्थं पुरुषसूक्तं पठेत् ॥

हवे संध्यादि कर्म करवा प्रारंभ करवानो अधिकार प्राप्त थवा माटे आचमन भस्म धारण विगेरे कहुं छुं. उपर लखी गया मुजब यथाविधि स्नान परवारी, धोयेलुं शुद्ध अने पवित्र एवुं वस्त्र पर्हेतिसर पहेरी, बीजुं तेवुंज वस्त्र "जमणो हाथ बहार उघाडो रहे तेवी रीते" ओढी कृमि कीटादि वर्जित अने निरुपद्रव एवा स्थान उपर दर्भनुं आसन, मृगाजिन अने कामळी आ त्रणे, अथवा आ त्रण पैकी जे शक्य होय ते; किंवा काष्ठादि निर्मित पण आसन लई, उत्तर के पूर्व तरफ मुख करी तेना उपर बेसवुं. स्वच्छ फीण के परपोटा वगरनुं ठंडु पाणी लई तेनाथी भरेलो एक कलश, पवालुं, आचमनी, तरभाणी, भस्म, रुद्राक्षमाळा, अर्घ्यपात्र, चंदनाक्षतादि, यथाशक्ति सामग्री संपादन करी पछी कर्मनो आरंभ करवो. एटले कर्म समाप्त थतां पहेलां वच्चे उठवानी अगर व्यवहारिक भाषा बोलवानी पण जरूर न पडे.

भस्म रुद्राक्ष धारण पद्धति.

प्रथम तूष्णीं आचमन तथा प्राणायाम करी विश्वेश्वरनुं ध्यान करतां अन्तःकरणने अन्तर्मुख एटले विषय पराङ्मुख

राखी जमणा हाथवडे भस्म लई डावा हाथमां मुकी जलवडे पल्हाळी वेउ हाथे चोळीने "त्र्यायुषमिति० छन्दः भस्म त्रिपुण्ड्र धारणे० ।" त्र्यायुषज्जम० षम् * आ मंत्र बोली कपाळ, वेउ स्कन्ध, हृदय, नाभिस्थान पृष्ठस्थान, गळूं, आ प्रत्येक स्थळे त्रिपुण्ड्र करवा; पछी रुद्राक्ष माळाने " त्र्यंबकमित्यस्य० छन्दः रुद्राक्ष माला धारणे० ॥ ॐ त्र्यम्बकंयज० तात् * " आ मन्त्रथी अभिमन्त्रण करी धारण करवी. अने शुद्धी माटे पुरुषसूक्तनुं पठन करवुं.

---

## प्रकरण ८ मुं.

सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्य नारायणऋषिः अनुष्टुप् छन्दः अन्त्यात्रिष्टुप् । शरीर०

ॐ सहस्रशीर्षा पुरुषः ऽ सहस्राक्षः ऽ सहस्रपात् । स भूमिं ऽ सर्व्वतस्पृत्वा त्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष ऽ एवेद ऽ सर्व्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमा तोज्ज्यायाँश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्व ऽ उदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने ऽ अभि ॥ ४ ॥

ततो विराडजायत विराजो ऽ अधि पूरुषः । स
जातो ऽ अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥
तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्ज्यम् । पशूँस्ताँश्चक्रे
वायव्यानारण्याग्ग्राम्याश्च ये ॥६॥ तस्माद्यज्ञात्सर्वहुत ऽ
ऋचः सामानि जज्ञिरे । छन्दाᳪ᳭सि जज्ञिरे तस्माद्यजु-
स्तस्मादजायत ॥ ७ ॥ तस्मादश्वा ऽ अजायन्त ये के
चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता ऽ अजा-
वयः ॥ ८ ॥ तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ।
तेन देवा ऽ अयजन्त साध्या ऽ ऋषयश्च ये ॥ ९ ॥ यत्पुरुषं
व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्यासीत्किम्बाहू
किमूरू पादा ऽ उच्येते ॥ १० ॥ ब्राह्मणो ऽस्य मुख-
मासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः
पद्भ्याᳪ᳭ शूद्रो ऽ अजायत ॥ ११ ॥ चन्द्रमा मनसो जात-
श्चक्षोः सूर्यो ऽ अजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्नि-
रजायत ॥ १२ ॥ नाभ्या ऽ आसीदन्तरिक्षᳪ᳭ शीर्ष्णो
द्यौः समवर्तत । पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ऽ
अकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोस्यासीदाज्ज्यङ्ग्रीष्म ऽ इध्मः शरद्धविः ॥१४॥
सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः । देवा
यद्यज्ञन्तन्वाना ऽ अबध्नन्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेन

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ १६॥

॥ इति पुरुषसूक्तम् ॥

आ प्रमाणे षोडश मंत्रात्मक पुरुषसूक्त प्रत्येक वेदमां छे. तेनो पवित्रता प्राप्त करवा माटे, षोडशाङ्गन्यास करवा, षोडशोपचार पूजा करवी होय त्यारे उपचार समर्पण करती वखते, तथा अभिषेक वखते उपयोग कराय छे.

पुरुषसूक्तना ऋषिछंद विनियोग आ प्रमाणे बोलवा.

" सहस्रशीर्षेतिषोडशर्चस्य सूक्तस्य नारायणऋषिः अनुष्टुप्छन्दः शरीरशुध्यर्थे जपे विनियोगः "

---

## प्रकरण नवमुं.

### ( १ ) अथ प्रातःसंध्याप्रयोगः॥

ॐ भूःस्वाहा ॐ भुवःस्वाहा ॐ स्वःस्वाहा इति त्रिरपःप्राश्य हस्तं प्रक्षाल्य ॐ विष्णुर्विष्णुः ॐ मनःमनः ॐ वाक्वाक् ॐ प्राणःप्राणः ॐ चक्षुःचक्षुः ॐ श्रोत्रं

प्रातः संध्या प्रयोग.

श्रोत्रं ॐ नाभिः ॐ हृदयं ॐ कण्ठः ॐ मुखं ॐ शिरः ॐ शिखा ॐ बाहुभ्यां यशोबलम् " इति अप उपस्पृश्य प्राणायामं कुर्यात् । प्रणवस्य परब्रह्मऋषिः परमात्मा देवता देवी गायत्री छन्दः व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगोतमात्रिवसिष्ठकश्यपा ऋषयः अग्निवाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि गायत्र्या विश्वामित्रः सविता गायत्री गायत्रीशिरसः प्रजापतिर्ऋषिः ब्रह्माग्निवाय्वादित्या देवताः यजुश्छन्दः एतेषां प्राणायामे विनियोगः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितु० यात् । ॐ आपोज्योतीरसोमृतंब्रह्मभूर्भुवः स्वरोम् ॥ इति त्रिवारं मनसाऽऽवर्त्तयन्प्रथमेनावर्तनेन पूरकं द्वितीयेन कुंभकं तृतीयेन रेचकं कुर्यात् । इत्यथेकं त्रीन् वा प्राणायामान् कृत्वा पाणौ जलमादाय सङ्कल्पं कुर्यात् ॥

अथ सङ्कल्पः । अत्राद्य महामाङ्गल्यप्रदे मासोत्तमे ........मासे.... ...पक्षे.........पुण्यतिथौ.........वासरे.... ....नक्षत्रे........स्थिते चंद्रे........स्थिते सूर्ये........स्थिते श्रीदेवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु शुभकरण एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ ममोपात्तदुरितक्षयद्वारा श्री परमेश्वरप्रीत्यर्थं

प्रातःसन्ध्योपासनमहं करिष्ये । इति सङ्कल्प्य हस्ते पुन जलं गृहीत्वा सूर्यश्चमेत्यस्य नारायणऋषिः सूर्यो देवता अनुष्टुपछन्दः अम्बुप्राशने विनियोगः । ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्राज्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदव- लुम्पतु यत्किञ्चिद् दुरितं मयि इदमहं मामभृत- योनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ *

इति मन्त्रेण तज्जलं प्राश्य द्विराचामेत् । पुनः पात्रान्तरे वामहस्ते वा जलं गृहीत्वा दर्भैः देवतीर्थेन (अङ्गुल्यग्रैर्वा) आत्मानं मार्जयेत्। तत्र मन्त्राः । आपोहिष्ठेतिमन्त्रत्रयस्य सिन्धुद्वीपऋषिः आपोदेवता गायत्रीछन्दः मार्जने विनि- योगः ॐ आपोहि० । ३ * इति मार्जनम् ।

सुमित्रियेत्यस्य प्रजापतिर्ऋषिः आपोदेवता यजुश्छंदः, द्रुपदादिवेत्यस्य प्रजापतिर्ऋषिः आपोदेवता अनुष्टुपछन्दः जलावघ्राणे ( अम्बुप्रक्षेपणेवा ) विनियोगः ।

ॐ सुमित्रियान ऽ आप ऽ ओषधय ऽ सन्तु । दुर्मि त्रियास्तस्मै सन्तु योस्मान् द्वेष्टि यञ्च वयं द्विष्म ऽ ॥ *

ॐ द्रुपदादिव मुमुचान ऽ ० १। * इति मन्त्राभ्यां दक्षिणहस्तस्थं जलमवघ्राय वामभागे भूमौ क्षिपेत् ।

( एवं त्रिः सकृद्वा, ) ऋतञ्चेतिमन्त्रत्रयस्य अघमर्षणऋषिः भाववृत्तो देवता अनुष्टुप्छन्दः अघमर्षणे विनियोगः ।

ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो ऽ अर्णवः ॥ समुद्रादर्णवादधि संवत्सरो ऽ अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्ष मथो स्वः ॥३॥ इति मन्त्रान्ते दक्षिणपाणिस्थे जलेऽ घमर्षणं कृत्वा ऽऽनवलोकितमेव तज्जलं वामभागे क्षिपेत् ॥ तत आचम्य, प्रणवस्य परब्रह्मऋषिः परमात्मादेवता देवीगायत्रीछन्दः, व्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती, गायत्र्या विश्वामित्रः सविता गायत्री, अर्घ्यदाने विनियोगः । ॐ भूर्भुवः स्वः तत्स॑वि० यात् । श्री सवितृसूर्यनारायणाय इदमर्घ्यं दत्तं न मम ॐ आपो ज्योती० रोम् । इत्यर्घ्यदानान्ते दक्षिणं कर्णं स्पृशेत् ॥ एवं पुन र्द्विः ॥ अर्घ्यत्रयान्ते ॐ असावादित्योब्रह्म ॥ इति मन्त्रेण प्रदक्षिणं परिभ्रमनं आत्मनः समन्तात् जलं सिञ्चेत् । तत उपविश्य, आचम्यप्राणाना-यम्य तिष्ठन् सूर्योपस्थानं कुर्यात् ॥ उद्वयमित्यस्य प्रस्कण्वः सवितानुष्टुप् उदुत्यमित्यस्य प्रस्कण्वः सविता गायत्री, चित्रं देवानामित्यस्य कुत्सः सविता त्रिष्टुप्, तच्चक्षुरित्यस्य परमेष्ठी प्रजापतिः सूर्यस्त्रिष्टुप् सूर्योपस्थाने विनियोगः ॥

ॐ उद्वयन्तमसस्परि स्वः पश्यन्त उत्तरम्।
देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ * ॐ उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्। *
ॐ चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्राद्यावापृथिवी ऽ अन्तरिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च। * ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतँ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात्॥ ४॥ *

इति तिष्ठन्नुपस्थायोपविशेत्। ततो गायत्रीमावाहयेत्। तेजोसीत्यस्य परमेष्ठी प्रजापतिर्ऋषि आज्यं देवता यजुश्छन्दः गायत्र्यावाहने विनियोगः।

ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि॥ *

आयातु वरदा देवी अक्षरं ब्रह्मसम्मितम्।
गायत्री छन्दसां मातेदं ब्रह्म जुषस्व मे॥ *

यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते।
यद्रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते॥ * सर्ववर्णे महादेवि सन्ध्या विद्ये सरस्वति। ओजोसि

सहोसि बलमसि भ्राजोसि देवानां धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छन्दर्षीनावाहयामि श्रियमावाहयामि । * इति गायत्रीमावाह्य प्रणवस्यपरब्रह्म ऋषिः परमात्मादेवता देवी गायत्री छन्दः व्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती गायत्र्या गायत्रीछन्दो विश्वामित्र ऋषिः सविता देवता अग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदय ५ रुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना समाणा श्वेतवर्णा साङ्ख्यायनसगोत्रा गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट् कुक्षिः । गायत्रीजपे विनियोगः ॥ ॐर्भूर्भुवः स्वः तत्सवितु० दयात् ॥ १ ॥ इत्यष्टोत्तरशतमष्टाविंशतिवारं वा यथाशक्ति गायत्रीं जपित्वा " अनेन गायत्रीजपाख्येन कर्मणा श्रीसवितासूर्य नारायणः प्रीयताम् ॥ इति जपं निवेदयेत् ॥

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्द्धनि । ब्राह्मणेभ्यो ऽ भ्यनुज्ञाता गच्छ देवि यथासुखम्* स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता । आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रजातुं ब्रह्मलोकम् ॥ * इति गायत्रीं विसर्जयेत् ॥ आसत्यलोकात्पातालादालोका-

लोकपर्वतात्। येसन्ति ब्राह्मणा देवास्तेभ्यो नित्यं नमोनमः ॥ इति ब्राह्मणादीन्नमस्कृत्य "... .... गोत्रोत्पन्न . .... प्रवरान्वित श्रीशुक्लयजुर्वेदान्तर्गत-माध्यन्दिनवाजसनेयशाखाध्यायी शर्माऽहं भो गुरो अभिवादयामि ॥ एवं वदन् गुरुमातृपितृज्येष्ठबन्ध्वादीन् यथासंभवं प्रणमेत। यस्यस्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्। * अनेन प्रातस्सन्ध्योपासनाख्येन कर्मणा श्री सवितृस्वरूपी साम्ब सदाशिवः प्रीयताम् न मम। ॐ तत्सत् ब्रह्मार्पणमस्तु ॥ इति कर्म समर्प्य कर्मान्ते द्विराचम्य प्राणायाम कुर्यात् ॥

॥ इति प्रातःसन्ध्याप्रयोग ॥

अथ प्रात सन्ध्या। गोकर्णाकृति जमणा हाथमां हृदय सुधी जई शके एटलु दर वखते पाणी लेवु अने अनुक्रमे "ॐ भू स्वाहा ॐ भुव स्वाहा ॐ स्व स्वाहा" आ मंत्र बोली त्रण वखत पीवु, अने हाथ धोई नाखी "ॐ विष्णुर्विष्णु० यशोबलम्" आ मन्त्रो बोली दरेक मन्त्रनो उच्चार करती वेळाए ते ते इन्द्रियोने जमणा हाथना अंगुष्ठवडे स्पर्श करी शकाय तेवी रीते स्पर्श करी हाथ धोई प्राणायाम करवो प्रथम "प्रणवस्य० योग" सुधी बोली "अंगुष्ठ अनामिका अने

कनिष्ठिका ■ आ त्रण आंगळीओ वडे नासा पुट दाबवा. प्रथम एक पुट वडे वायूनुं पूरण करवुं पछी बन्ने पुट बंध राखवा अने पछी दाबी राखेलुं पुट खुल्लुं करवुं अने बन्ने पुट बंध करी रोकी राखेला वायूने हळवे हळवे छोडवो. आ क्रियाओने अनुक्रमे पूरक कुंभक अने रेचक कहे छे. दरेक क्रिया करती वेळाए " ॐ भूः " थी ते " रोम् " ॥ सुधीनो मंत्र मनमां जपवो एटलुं करवाथी एक प्राणायाम थाय; एवो एक अथवा त्रण प्राणायाम करवा; अने हाथमां जल लई सङ्कल्प करवोः—

" अद्यायमहा० करिष्ये " एवुं बोली सङ्कल्प करी; फरी हाथमां जल लई " सूर्यश्चमेत्यस्य० ॐ सूर्यश्च० स्वाहा" आ मंत्र बोली ते पाणी पीवुं. अने ॐ भूः स्वाहा विगेरे प्रथम संध्याना आरंभमां लख्या प्रमाणे बे वार आचमन करवुं.

पछी आचमनीमां, बीजा पात्रमां, अथवा डाबा हाथमां उदक लई दर्भ वडे अथवा दक्षिण हस्तना आंगळीओना अग्र-वडे ते पाणी अनुक्रमे मस्तक उपर पग उपर तथा हृदय उपर छांटवुं. एने मार्जन कहे छे. ते वखते बोलवाना मंत्रोः— आपोहि० योगः । ॐ आपो० यः १ ॐ नान० तन । ॐ महे० से । ॐ योव० सः । ॐ तस्य० हनः ॐ उशती० रः । ॐ तस्मा० वः । ॐ यस्य० थ । ॐ आपो० नः ।९। पछी जमणा हाथमां पाणी लई; " सुमित्रियेत्यस्यप्रजा० ॐ सुमित्रिया० ॐ द्रुपदा० नेमः ॥ " आ बे मंत्रो बोली,

हाथमां लीधेला पाणीने सुंघी पोतानी डाबी बाजू तरफ फेंकवुं. आ प्रमाणे त्रण वखत के एक वखत करवुं. फरी जमणा हाथमा पाणी लई आगळ लखेलो मंत्र भणी डाबा नासा पुट वडे वायूने उपर खेंची, ते वायू दक्षिण नासा पुट वडे हाथमा लीधेला पाणी उपर छोडवो; अने " प्राणायाम, मार्जन, तथा जळावघ्राण, आ क्रियाओ वडे शरीरथी छुटो पडेलो पाप पुरुष प्राण वायूना मार्गे हाथमा लीधेला पाणीमा पड्यो छे, " एवी भावना करी पाणी तरफ न जोता ते डाबी बाजू तरफ जमीन पर नाखवुं. " ऋतञ्चेति० योग । ॐ ऋतञ्चसत्य० स्वः ॥३॥ पछी पूर्ववत् आचमन करी उभा रहीने अंजलीमा शक्य होय तो गन्धाक्षतपुष्पमिश्र उदक लई अथवा शुद्ध पवित्र उदक लई " प्रणवस्य० अर्घ्यदाने० । ॐ भूर्भुवःस्वः तत्सवितु० यात् । श्रीसवितृ० दत्तं न मम" आ प्रमाणे बोलतानी साथेज ते उदक जंचेथी सारा पाणीथी भरी मुकेला त्रस्माणि विगेरे पात्रमा नाखवु. ते नाखती वखते ( अंजलीमाना उदकने ) अंगुष्ठ तथा तर्जनी अडवा देवी नहीं. आ प्रमाणे त्रण अर्घ्य आपवा [ सन्ध्या काल थई गयो होय तो " प्रणव० सविता गायत्री कालातिपत्ति जनित प्रत्यवाय परिहारार्थ अर्घ्य दाने वि०" एवो विनियोग बोली एक अर्घ्य वधारे आपवो. ]

प्रत्येक अर्घ्य आप्या पछी " ॐ आपोज्यो० रोम् " आ शिरोमंत्र बोली जमणा हाथना अंगुष्ठनो दक्षिण कर्णने तथा

बेउ नेत्रने स्पर्श करवो. आ प्रमाणे त्रण अर्घ्य अथवा चार अर्घ्य आपी रह्या पछी " ॐ असा० ह्म । " आ मंत्र बोली जमणा हाथे थोडु थोडु पाणी जमीन उपर नांखतां पोतानेज प्रदक्षिणा करवी. पछी आसन उपर बेसी, आचमन प्राणायाम करी; उभा थवुं अने हाथ जोडी नम्रतापूर्वक सूर्यनुं उपस्थान करवुं. " उद्वयमित्यस्य० उदुत्यं० चित्रं० तचक्षु० योगः । ॐ उद्वयं० मम् । ॐ उदुत्यं० येम् । ॐ चित्रं० यंश्च । ॐ तचक्षुर्दे० शृतात् ।४।" आ प्रमाणे उपस्थान करी आसन उपर बेसी गायत्रीनुं आवाहन करवुं. " तेजोसीत्यस्य० योगः ॐ तेजोसि० मसि । आयातु० स्वपे ॥ यदन्हा० ते । यद्रात्र्या० च्यते ॥ सर्ववर्णे० स्वति । ओजोसि० यामि ।" आ प्रमाणे गायत्रीनुं आवाहन करी, जपनो विनियोग बोलवो. " प्रणवस्य० गायत्र्यागायत्रीछन्दो० योगः । ॐ भूर्भुवः स्वः तत्सवितु० यात् ॥ १०८ ॥" आ प्रमाणे विनियोग बोली एकसो आठ, के अष्टाविंशति वार जप करी, ( अथवा दश ) " अनेनगाय० प्रीयताम् " आ प्रमाणे बोली जप समर्पण करवो. पछी " उत्तमे शिखरे० स्तुतो मयावरदा०"। आ बे मंत्रवडे गायत्रीनुं विसर्जन करी; " आसत्यलो० नमः " आ मंत्रवडे ब्राह्मणादिवंद्योने नमस्कार करी; " ........ गोत्रोत्पन्नः ............प्रवरान्वितः श्री० " आ प्रमाणे गोत्र प्रवरोच्चारपूर्वक " आचार्य गुरु पिता माता ज्येष्ठ

वंधू विगेरे ” ने नमस्कार करवो. पछी “ यस्यस्मृत्या० तम् ” अनेन प्रातःसंध्यो० नमम । ॐ तत्सत्० ” आ प्रमाणे कर्म समर्पण करवुं. अने कर्म समाप्ती थया पछी द्विराचमन तथा प्राणायाम करवो.

आ प्रमाणे प्रातःसंध्यापद्धति समजवी. ॥

---

## प्रकरण १० मुं.

### अथ देवपूजा प्रयोगः ॥

देवपूजानो विधि.

प्रातः कृतसन्ध्यः कृतनित्यहोमः यथासम्भवं सम्पादितोपचारः प्राङ्मुख उदङ्मुखो देवताभिमुखो वा दर्भासन उपविश्य बद्धशिख उपवीत्याचम्य प्राणानायम्य शान्तिं पठेत् ॥

ॐ स्वस्ति नSS इन्द्रो वृद्धश्रवा ३ स्वस्ति नं – पूषा विश्ववेदा ३ । स्वस्ति न स्तार्क्ष्यो S अरिष्टनेमि ३ स्वस्ति नो बृहस्पतिर्दधातु । * ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ श्रीमन्महागणाधिपतये नमः। ॐ इष्टदेवताभ्यो नमः । ॐ कुलदेवताभ्यो नमः। ॐ ग्रामदेवताभ्यो नमः। ॐ स्थानदेवताभ्यो नमः । ॐ वास्तुदेवताभ्यो नमः ।

ॐ वाणीहिरण्यगर्भाभ्यां नमः। ॐ श्री लक्ष्मीनाराय-णाभ्यां नमः। ॐ श्री उमामहेश्वराभ्यां नमः ॐ शचीपुरन्दराभ्यां नमः। ॐ मातापितृचरण कमलाभ्यां नमः। ॐ सर्वेभ्यो देवेभ्यो नमः। ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमोनमः। निर्विघ्नमस्तु॥ सुमु-खश्चैकदन्तश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः। * धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः। द्वादशैतानि नामानि यः पठेच्छृणुयादपि * विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा। सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते * शुक्लाम्बरधरं देवं शशिवर्ण चतुर्भुजम्। प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये * सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तुते * सर्वदासर्वकार्येषु नास्ति तेषाममङ्गलम्। येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः * विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान्। सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये * अभीप्सितार्थसिध्यर्थं पूजितो यः सुरासुरैः। सर्वविघ्नहरस्तस्मै गणाधिपतये नमः।* सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः। देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः। = विष्णुर्विष्णुर्विष्णु श्रीमद्-भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मण. द्वितीये परार्द्धे विष्णुपदे श्री श्वेतवाराहकल्पे

वैवस्वतमन्वन्तरे कलियुगे कलिप्रथमचरणे भरतवर्षे-भरतखण्डे--जम्बुद्वीपे आर्यावर्तान्तरगतब्रह्मावर्तैकदेशे कन्याकुमारिकाक्षेत्रे रेवाया उत्तरे तीरे विक्रमशके शालीवाहनशके..........नाम्नि संवत्सरे..........अयने ...... ऋतौ......मासे......पक्षे......तिथौ ......वासरे......नक्षत्रे......स्थिते वर्तमाने चन्द्रे......स्थिते श्रीसूर्ये..........स्थिते श्रीदेवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु शुभकरण एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्री..........प्रमुखपञ्चायतनदेवता इष्टदेवताकुलदेवता प्रीत्यर्थं यथामिलितोपचारद्रव्यैः पुरुषसूक्तेन ध्यानावाहनादि षोडशोपचारैः पूजनं करिष्ये ॥ तत्रादौ निर्विघ्नतासिध्यर्थं गणपतिस्मरणं (शरीरशुध्यर्थं पुरुषसूक्तन्यासान्) कलशशङ्खघण्टापूजनञ्च करिष्ये । इति सङ्कल्पः ॥

ॐ गुणानांन्त्वा गुणपतिं ऽ हवामहे प्रियाणांन्त्वा प्रियपतिं ऽ हवामहे निधीनान्त्वा निधिपतिं ऽ हवामहे व्वसो मम । आहमंजानि गर्भधमात्वमंजासि गर्भधम् *

ॐ भूर्भुवःस्वः श्रीमन्महागणपतये नमो नमः " इति गणपतिंस्मृत्वाः—

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वञ्च धारय मां देवि पवित्रं कुरु चासनम्॥ * अपसर्पन्तु ते भूताये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया। * अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्। सर्वेषामविरोधेन पूजाकर्म समारभे॥ इति दिग्रक्षणं विधाय वामपादपार्ष्णिना भूमिं त्रिस्ताडयेत्॥

[ न्यासचिकीर्षायां पुरुषसूक्तमन्त्रैरित्थं न्यासान् न्यसेत्। ॐ सहस्रशीर्षा०। इति वाम करे १ ॐ पुरुष एवे०। इति दक्षिण करे २ ॐ एतावानस्य०। इति वामपादे ३ ॐ त्रिपादूर्ध्व० इति दक्षिणपादे ४ ॐ ततो विराड०। इति वामजानौ ५ ॐ तस्माद्यज्ञात्सं०। इति दक्षिणजानौ ६ ॐ तस्मा० तृक्चऋ्सा०। इति वामकट्याम् ७ ॐ तस्मादश्वा०। इति दक्षिणकट्याम् ८ ॐ तंयज्ञं०। इति नाभौ ९ ॐ यत्पुरुषंव्य०। इति हृदये १० ॐ ब्राह्मणो०। इति वामकुक्षौ ११ ॐ चन्द्रमा०। इति दक्षिणकुक्षौ १२ ॐ नाभ्याआ०। इति कण्ठे १३ ॐ यत्पुरुषेण० इति मुखे १४ ॐ सप्तास्यासन्०। इति नेत्रयोः १५ ॐ यज्ञेनय०। इति शिरसि १६ इति ]

अथ शुद्धजलपूरितं कलशं स्ववामभागे निधाय

तदुपरि दक्षिणं हस्तं न्यड्मुखं संस्थाप्य वरुणमावाहयेत्। तद्यथाः—

ॐ तत्त्वांयामिब्रह्मणा वन्दमानस्तदाशांस्ते यजमानो हविर्भिः। अहेडमानो वरुणेहवोध्युरुशꣳ समान आयुः प्रमोषीः ॥ * अस्मिन् कलशे वरुणं सांगं सपरिवारं सायुधं सशक्तिकं आवाहयामि ॐ भूर्भुवः स्वः वरुणायनमः सर्वोपचारार्थे गन्धाक्षतपुष्पं समर्पयामि नमस्करोमि। इति नत्वादेवपुरतः स्वदक्षिणभागे शङ्खं निधाय।

ॐ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयम् ॥ *

ॐ भूर्भुवः स्वः शङ्खस्थदेवताभ्यो नमः आवाहयामि। सर्वोपचारार्थे गन्धपुष्पाणि समर्पयामि नमस्करोमि। इति नत्वा देवपुरतः स्ववामभागे घण्टां निधायः—

ॐ सुपर्णोसि गरुत्माँ स्त्रिवृत्ते शिरो गायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ। स्तोमं आत्मा छन्दाꣳ स्यङ्गानि यजूꣳषि नाम। साम ते तनूर्वामदेव्यं यज्ञायज्ञियम्पुच्छान्धिष्ण्याः शफाः॥ सुपर्णोसि गरुत्मान्दिवंगच्छस्वः पत॥*

ॐ भूर्भुवःस्वः घण्टास्थगरुडाय नमः आवाहयामि। सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि नमस्करोमीति

नत्वा शङ्खोदकेन पूजाद्रव्याणि आत्मानं च मोक्षयेत् । तत्र मन्त्रः ।

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरं शुचिः ॥ *
ततो घण्टां वादयेत् । तत्र मन्त्रः ।
आगमार्थन्तु देवानां गमनार्थन्तु रक्षसाम् ।
कुर्वे घण्टारवं तत्र देवताह्वानलक्षणम् ॥ * इति
ततः पञ्चायतन-देवताः ध्यायेत् स्वेष्टदेवताश्च ।

पूर्वं

| | | | | |
|---|---|---|---|---|
| शि२ ग३ | वि२ शं३ | शि२ ग३ | वि२ शं३ | वि२ सू३ |
| वि१ | दे१ | सू१ | ग१ | शि१ |
| दे५ सू४ | सू५ ग | दे५ वि४ | दे५ सू४ | दे५ ग४ |

पश्चिम

एतदन्यतमप्रकारेण पञ्चायतनदेवताः स्थापनीयाः ॥

अथ ध्यानम् । श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः क्षीराब्धौ रत्नदीपे सुरतरुविमले रत्न-

सिंहासनस्थम् ॥ दोर्भिः पाशाङ्कुशेष्टाभयधृतिरुचिरं चन्द्र· मौलिं त्रिनेत्रं; ध्यायेच्छान्त्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥ १ ॥ इति गणपतेः ॥

नमो देव्यै महादेव्यै शिवायै सततं नमः॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ २ ॥ इति देव्याः ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं, विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्। लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं, वन्देविष्णुं भवभयहरं सर्वलोकैक नाथम् ॥ इति विष्णोः ॥ ३ ॥

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं, रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्। पद्मा· सीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं; विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्॥ इति शङ्करस्य ॥ ४ ॥

ध्येयः सदा सवितृमण्डलमध्यवर्ती, नारायणः सरसि· जासनसन्निविष्टः ॥ केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ इति सूर्यस्य ॥ ५ ॥

ॐ भूर्भुवःस्वः·········· प्रमुख पञ्चायतनदेवताभ्यो नमः [ इष्टदेवताकुलदेवतानां च पृथक्पृथक् ध्यानं चेद् "इष्ट·

देवताकुलदेवताभ्यो नमः " इत्यृषिम् ] ध्यायामि । इत्यु-क्त्वा पुष्पं तुलसीपत्रादि वा हस्ते गृहीत्वा तत्र ध्यात-देवतां नेत्रद्वारा ऽवतीर्णां प्रकल्प्य तत्पुष्पादि पूजनीय-पञ्चायतनादिदेवतोपरि निधाय देवताविर्भावं विभावयेत्। ततः ॐ सहस्रशीर्षा० । १ । ॐ भूर्भुवःस्वः ·········पञ्चा-यतनदेवताभ्यः " इष्टदेवताकुलदेवताभ्यो नमः " आवा-हयामि इति वदन् तुलसीपत्रपुष्पाक्षताद्यन्यतमं समर्प-येत् । यदा च नोपचारसमर्पणशक्यता तदा ऽक्षतातुलसी-पत्रादि समर्पयेत् नमस्कुर्याद्वा ॥

ॐ पुरुषएवे० ।२। ॐ भूर्भुवःस्वः ·········पञ्चाय० इष्टकुल० आसनं समर्पयामि । इति वदन् आसनं तदभावे तुलसीपत्रादि समर्पयेत् । ॐ एतावानस्य० । ३ । ॐ भूर्भुवःस्वः·········पञ्चा० पाद्यं० ॥ ॐ त्रिपादूर्ध्व० । ४ । ॐ भूर्भुवःस्वः पञ्चाय० अर्घ्यं समर्प०। ॐ ततोविरा०।५। ॐ भूर्भुवःस्वः·········पञ्चायतन० आचमनीयं० । ॐ तस्माद्यज्ञा० । ६ । ॐ भूर्भुवःस्वः·········पञ्चाय० स्ना-नीयं समर्प० । " स्नानार्घ्यवस्त्रयज्ञोपवीतनैवेद्यान्ते आच-मनीयं समर्पयेत् " " अथ पञ्चामृतस्नानम् ॥ "

ॐ पयः ÷ पृथिव्व्यामय्योषधीषु पयो दिव्व्यन्त-रिक्षे पयोधाः ३ ॥ पयस्वतीः ३ प्रदिशः ÷ सन्तु मह्यम्॥ १॥

ॐ भूर्भुवः स्वः अमुक······ पञ्चायतन० पय:स्नानं सम० पय:स्नानान्ते शुद्धोदकस्नानं समर्पयामि, शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

ॐ दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः। सुरभिनो मुखाकरत्प्रणऽआयूंषि तारिषत् ॥२॥

ॐ भूर्भुवःस्वः······ पञ्चायतन० दधिस्नानं सम० दधिस्नानान्ते शुद्धोदकस्नानं० शुद्धोदकस्नानान्ते आचमनीयं० ॥ २ ॥

ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम। अनुष्ष्वध मावह मादयस्व स्वाहाकृतं वृषभवक्षि हव्यम् ॥ ३ ॥ ॐ भूर्भुवः स्वः···········पञ्चायतनदे० घृतस्नानं० घृतस्नानान्ते शुद्धोदकस्नानं० शुद्धो० आचमनीयं समर्पयामि।

ॐ मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्न्नः सन्त्वोषधीः ॥१॥ मधुनक्तमुतोषसो मधुमत्पार्थिवँ रजः। मधुद्यौरस्तु नः पिता ॥ २ ॥ मधुमान्नो व्वनस्पतिर्म्मधुमाँऽअस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः ॥ ३ ॥ ॐ भूर्भुव स्व ······ पञ्चाय० मधुस्नानं० मधुस्नानान्ते शुद्धोदकस्नानं० शुद्धोद० आचम० ॥ ४ ॥

ॐ अपाᳪरसमुद्वयसᳪ सूर्य्ये सन्तᳪसमाहितम्। अपाᳪ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ५ ॥

ॐ भूर्भुवःस्वः ..........पञ्चायतन० शर्करास्नानं० शर्करास्नानान्ते शुद्धो० शुद्धोदकस्नानान्ते आचमनीयं० ॥

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ६ ॥ ॐ भूर्भुवःस्वः.........पञ्चायतन० पञ्चगन्धोदकस्नानं० गन्धोदकस्नानान्ते शुद्धो० शुद्धोदकस्नानान्ते आचमनीयं स० ॥

ॐ अᳪशुना ते अᳪशुः पृच्यतां परुषा परुः। गन्धस्ते सोममवतु मदाय रसो ऽ अच्युतः ॥ १ ॥ ॐ भूर्भुवःस्वः..........पञ्चायतन० उद्वर्तनपूर्वकमुष्णोदकस्नानं समर्प० उष्णोदकस्नानान्ते आचमनीयं० । ॐ भूर्भुवःस्वः पञ्चायतन० नमः विलेपनार्थे चन्दनं स०, अलङ्कारार्थे अक्षतान् स०, पूजार्थे पुष्पाणि सम० धूपं दीपं स० ( दर्शयामि वा ) नैवेद्यं स० नैवेद्यान्ते आच० करोद्वर्तनार्थे चन्दनं० मुखवासार्थे पूगीफलताम्बूलं सम० दक्षिणां० मन्त्रपुष्पं सम० ॥ " सम्मिश्रपञ्चामृतेन स्नापने तु " :—

ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः । सरस्वती तु पञ्चधा सोदेशे भवत्सरित् ॥ १ ॥

ॐ भूर्भुवः स्वः··········पञ्चायतन दे० पञ्चामृतस्नानान्ते० शुद्धोदकस्नानं० शुद्धोदकस्नानान्ते आच० । इति विशेषः । एवं पञ्चामृतस्नानादिविशिष्टोपचारयुतं पूजनं कार्य्यम्, तत्र समर्पितं पुष्पादि स्वस्योत्तरतो निक्षिप्यदेवमभिषिञ्चेत् । देवोपर्यखण्डां जलधारां पातयन् पुरुषसूक्तश्रीसूक्तरुद्राध्यायादीनां यथाशक्ति यथावकाशञ्च पाठं कुर्यात् । तत्रावश्यकं पुरुषसूक्तम् ॥

ॐ सहस्रशीर्षा पुरु० देवाः ॥ १६ ॥ इत्याद्यन्ते शङ्खपूरितोदकेन ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपांसुरे स्वाहा ॥

इति मन्त्रेण देवान् स्नापयेत् । केवलस्य शिवस्य सूर्यस्य वा पूजने तु न शङ्खोदकेन स्नापनम् ।

ततोऽभिषेकपात्रस्थोदकशेषेण देवान् स्नापयन् शान्तिपठेत् ॥ सा च यथाः—

ॐ द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः ।

शान्तिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ यतोयतः समीहसे ततो नोऽअभयङ्कुरु । शन्नः कुरु प्रजाभ्यो ऽभयन्नः पशुभ्यः ॥ सर्वेषां वाऽएष वेदानाᳬ रसो यत्साम सर्वेषामेवैनमेतद्वेदानाᳬ रसेनाभिषिञ्चति । *ॐ शान्तिः शान्तिः शान्तिः । सुशान्तिर्भवतु । सर्वारिष्टशान्तिर्भवतु । ॐ अमृताभिषेकोस्तु ॥ ॐ भूर्भुवः स्वः······पञ्चायतनदे० अभिषेकस्नानं स० स्नानान्ते आचमनीयं समर्पयामि ॥ देवतीर्थं पात्रान्तरे निधाय देवेभ्यो वस्त्राद्युपचारान् समर्पयेत् ॥

ॐ तस्माद्यज्ञा० ऋचःसा० ॥ ७ ॥ ॐ भूर्भुवःस्वः ······पञ्चा० वस्त्रं स०।ॐ तस्मादश्वा अ०।८। ॐ भूर्भुवःस्वः ······पञ्चाय० यज्ञोपवीतं० । ॐ तं यज्ञं ब्र० । ९ । ॐ भूर्भुवःस्वः······पञ्चा० विलेपनार्थे चन्दनं० सौभाग्यद्रव्यं नानापरिमलद्रव्याणि स० । अलंकारार्थे अक्षतान् समर्पयामि॥ ॐ यत्पुरुषं० । १० । ॐ भूर्भुवःस्वः······पञ्चाय० ऋतुकालोद्भवपुष्पाणि स० । तुलसीपत्राणि स० बिल्वपत्राणि स० दूर्वाङ्कुरान् स०। ॐ ब्राह्मणोस्य० । ११ । ॐ भूर्भुवःस्वः ······पञ्चाय० धूपं आघ्रापयामि । ( समर्पयामि वा)। ॐ चन्द्रमामन० । १२ । ॐ भूर्भुवःस्वः ······पञ्चाय० दीपं दर्शयामि (समर्पयामि वा) ॐ नाभ्या आ० । १३ । ॐ भूर्भुवःस्वः ······पञ्चाय० नैवेद्यं स० ।

प्रथमं देवाग्रे चतुरस्रं मण्डलं कृत्वा तदुपरि यथासम्भवं भक्ष्यभोज्यादिपूर्णं पात्रं संस्थाप्य तुलसीदलाद्यन्तरितोदकेन सम्प्रोक्ष्य, परिषिच्याऽमनग्रं कृत्वा ग्रासमुद्रया नैवेद्यं स मर्पयेत् । ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा ॐ व्यानाय स्वाहा ॐ उदानाय स्वाहा ॐ समानाय स्वाहा ( ॐ ब्रह्मणे स्वाहा इति केचित् ) नैवेद्य मध्येपानीयं सम० । पुनः ॐ प्राणा० ॐ अपाना० ॐ व्याना० ॐ उदाना० ॐ समानाय० ( ॐ ब्रह्मणे० ) उत्तरापोशनं सम० हस्तप्रक्षालनं० मुखप्रक्षालनं स० करोद्वर्तनार्थे चन्दनं स० । आचमनीयं समर्पयामि ॥ ॐ यत्पुरुषेण० । १४ । ॐ भूर्भुव स्वः ………पञ्चाय० मुखवासार्थे पूगीफलताम्बूलं पूजासाद्गुण्यार्थं यथाशक्ति दक्षिणां कालोद्भवानि फलानि च समर्पयामि ॥ ॐ इदᳪहविः प्रजननम्मेऽअस्तु दशवीरᳪसर्व्वगणᳪ स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि। अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्मासुधत्त ॥

ॐ भूर्भुवः स्वः………पञ्चायतन० उत्तरनीराजनं कर्पूरार्त्तिक्यं वा स० ॐ मुखास्यो० ॥१५॥ ॐ भूर्भुवः स्वः……पञ्चाय० प्रदक्षिणां स० ॐ ह्येनं ग्रुप्त० ॥ १६ ॥ ॐ भूर्भुवः स्वः……पञ्चायत० मन्त्रपुष्पाञ्जलिं नमस्कारं च समर्पयामि ॥ अथ देवान् प्रार्थयेत् ॥ आवाहनं न जानामि न जानामि विसर्जनम् । पूजां चैव न जानामि क्षम्यतां

परमेश्वर ॥ १ ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ २ ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम । तस्मात्कारुण्यभावेन रक्षस्व परमेश्वर ॥ ३ ॥ गतं पापं गतं दुःखं गतं दारिद्र्यमेव च । आगता सुखसम्पत्तिः पुण्योऽहं तव दर्शनात् ॥ ४ ॥ यस्य स्मृत्या च नामोक्त्या तपो-यज्ञ-क्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ५ ॥

अनेन यथाशक्ति यथाज्ञानेन कृतषोडशोपचार पूजनेन''''पञ्चायतन देवताः ( इष्ट देवताः कुल देवताः ) प्रीयन्ताम् नमम ॐ तत्सद् ब्रह्मार्पणमस्तु ॥ इति कर्म समर्पणं कृत्वा देवतीर्थं पिबेत् । तत्रादौ शङ्खं जलेनापूर्य देवपरितो भ्रामयेत् ॥ " शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि । अङ्गलग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति ॥ * इति मन्त्रेण भ्रामितशङ्खादुदकं दक्षिणहस्ते गृहीत्वा तेना स्यानं मोक्षयित्वा हस्ते तीर्थमादाय " अकालमृत्युहरणं सर्वव्याधिविनाशनम् । ( विष्णु ) देवपादोदकं तीर्थं जठरे धारयाम्यहम् * इति पिबेत्॥ इति देवपूजा प्रयोगः ॥

देव पूजानो माहिती साथे प्रयोग.

**अथ देवपूजाः**—प्रातः सन्ध्या तथा नित्यहोम ( करवानो होय तो ते) करी शक्त्यनुसार उपचार मेळवी, पूर्वाभिमुख, उत्तराभिमुख अथवा देवताभिमुख थवाय तेवी रीते दर्भादि

निर्मित आसन उपर बेसी शिखा बांधी, तथा यज्ञोपवीत सव्य राखी आचमन अने प्राणायाम करी शान्तिपाठ भणवो. " ॐ स्वस्तिन० शान्तिः । " पछी " ॐश्रीमन्महागणाधिपतये नमः" अहींथी "सर्वेभ्यो । ब्राह्मणे० नमः" सुधी दरेक " नमः " शब्दान्त वाक्यना उच्चार साथे नमस्कार करी " सुमुख० महेश्वरा. " अहीं सुधीना मङ्गल श्लोक बोली हाथमा " अक्षतायुक्त " अथवा " केवल " जल लई; " विष्णु विष्णु विष्णुः श्रीमद् भगवतो० करिष्ये " सुधी बोली सङ्कल्प करवो; पछी फरी हाथमा जल लई " तत्रादौ० " थी " करिष्ये " सुधी बोली सङ्कल्प करवो; बजो सङ्कल्प करती वेळाए " शरीर शुद्धी माटे पुरुषसूक्त न्यास " करवा होय तो ते शब्द बोलवा; अने न करवा होय तो तेटला शब्दो छोडीने सङ्कल्प करवो. पछी " ॐ गणानान्त्वा० गणपतये नमोनमः " एवी रीते गणपतिनुं स्मरण करी; " पृथिव्रत्वया० अपसर्पन्तु० अपक्राम० रभे ॥ ३ ॥ " आ त्रण मंत्रवडे भूमिप्रार्थना भूतापसारण अने दिग्रक्षण करी; डाबा पगवडे भूमीने त्रण वखत ताडण करवुं. [ न्यास करवा होय तो दरेक मन्त्र बोली कया अंगने स्पर्श करवो ते आ प्रमाणेः— " ॐ सह ०। १ डाबा हाथने; ॐ पुरु ०। २ जमणा हाथने; ॐ एता ०। ३ डाबा पगने ॐ त्रिपा० ४। जमणा पगने; ॐ ततोवि० । ५ । डाबा घुंटणने; ॐ तस्मा० । ६ । जमणा घुंटणने; ॐ तस्माद्य० ७। डाबी केडने; ॐ तस्माद्‌० ८।

जमणी केडने; ( कटि मागने ) ॐ तंव्यज्ञं० ९। नाभिस्थानने; ॐ यत्पुरुषं १०। हृदयने; ॐ ब्राह्मणो० ११। डाबी कुखने; ॐ चन्द्रमा० १२। जमणी कुखने; ॐ नाभ्यां० १३। कण्ठने; ॐ यत्पुरुषेण० १४। मुखने; ॐ सप्तास्यां० १५। नेत्रोने; ॐ यज्ञेन यज्ञ० १६। मस्तकने" स्पर्श करवो अने ते ते स्थान मन्त्रमय थयुं एवुं समजवुं. आ प्रमाणे करवाथी शुद्धी थाय छे. ] पछी शुद्धजलपूर्ण कलश पोताना डाबी बाजू तरफ मुकी तेना उपर जमणो हाथ अधोमुख आच्छादन करी " ॐ तत्वांयामि० " आ मन्त्रवडे वरुणनुं आवाहन करी " ॐ भूर्भुवःस्वः वरु० " आ प्रमाणे बोली ते कलशने गन्ध अक्षता पुष्प समर्पण करी नमस्कार करवो. पछी देवना अग्र भागे पोताना जमणा हाथ तरफ शंख मुकी, ॐ अग्निर्ऋषिः० ॐ भूर्भुवःस्वः शङ्ख०" आ प्रमाणे बोली शङ्खस्थ देवतानुं आवाहन करी, तेमने गन्धादि उपचार समर्पण करी नमस्कार करवो. देवना अग्र भागे पण पोताना डाबी बाजू तरफ घण्टाने मुकी, " ॐ सुपर्णा० ॐ भूर्भुवःस्वः घण्टास्थ० " आ प्रमाणे बोली गरुड नामक देवतानुं आवाहन करी तेने गन्धाक्षतादि उपचार समर्पण करी नमस्कार करवो. पछी शङ्खमां पाणी भरी, ते पाणी जमणा हाथमां लई तेनाथी पोताना शरीरनुं, पूजाना स्थाननुं, तथा पूजा साहित्यनुं एकवार अथवा त्रण वार प्रोक्षण करवुं. ते वखते " अपवित्रःपवित्रोवा०" ए

मंत्र बोलवो. तेज प्रमाणे राक्षसादिपुण्यापहारकोना प्रयाण माटे तथा देवोने आव्हान करवा माटे घण्टानाद करवो. ते वखते "आगमार्थं०" आ श्लोक बोलवो. पछी पोताना इष्टदेव कुर-देव तथा पञ्चायतन पैकी जेमनुं पूजन करवानुं छे तेमनुं ध्यान एटले एकाग्र अंतःकरणवडे आपादतलमस्तक स्वरूपनुं चिंतन करवुं. पूजा करवा माटे आगळ लीधेला पञ्चायतननो स्थापन प्रकार पांच प्रकारनो छे. जे देवताने प्रधान मानवानो छे तेने मध्यमां मुकी बाकीनां देवताओ ईशान्य दिशाथी आरंभी प्रदक्षिणक्रमे स्थापवा. अनुक्रम तथा देवताओ कोठामां बतावी छे. आ प्रमाणे स्थापन करी, हाथमां पुष्प तुलसीपत्र के अक्षता लई, "श्वेताङ्गं०" आ श्लोक प्रमाणे गणपतीनुं; "नमो देव्यै०" आ श्लोकथी देवीनुं, "शान्ताकारं०" आ श्लोक प्रमाणे विष्णूनुं; "ध्यायेन्नित्यं०" आ श्लोक प्रमाणे शंकरनु, अने "ध्येयःसदा० आ श्लोक प्रमाणे सूर्यनु ध्यान करी; तथा पोताना इष्टदेवनु अने कुलदेवनु पण परंपरा प्राप्त पद्धती प्रमाणे ध्यान करी, हाथमां लीधेला पुष्प तुलसीपत्र के अक्षता तरफ जोई; "हृदयमां एकाग्र चित्तथी चिंतित एवी तेजोमय देवता नेत्रद्वारा हाथमां लीधेला पुष्पादि पदार्थ उपर आवनारी छे" एवी भावना करी ते पुष्पादि, पूजनीय पञ्चायतनादिकने समर्पण करवु; अने पञ्चायतनादिकनां पूजनीय देवतानो आविर्भाव थयो एवु समजीने आवाहनादि उपचार समर्पण करवा. "ॐ गुरवे नमः आवाहयामि"। १। आ

प्रमाणे बोली तुलसीपत्र अक्षता अथवा पुष्प समर्पण करवुं. ज्यारे प्रत्यक्ष उपचार समर्पण करवाना न होय, त्यारे अक्षता तुलसीपत्र के पुष्प समर्पण करवु, अथवा नमस्कार करवो.

" ॐ पुरुष० नमः आसनं० । २ । " आ प्रमाणे बोली देवने आसन अथवा तुलसीपत्रादि समर्पण करवु. "ॐ एतावा० नमः पाद्यं० । ३ । " " ॐ त्रिपा० नमः अर्घ्यं० । ४ । " आ प्रमाणे बोली गन्धाक्षत–पुष्प–मिश्र उदक समर्पण करवुं. "ॐ ततोवि० नमः आचमनीयं० । ५ । " "ॐ तस्माद्यज्ञा० नमः स्नानीय० । ६ । " " स्नान अर्घ्य वस्त्र यज्ञोपवीत अने नैवेद्य समर्पण कर्या पछी आचमनीयोदक समर्पण करवुं " एकादशी विगेरे पर्वणीना दिवसे देवने पञ्चामृत स्नान करावबु, तेम विजया–दशमी विगेरे तेहेवारना दिवसे पञ्चामृत स्नान उपरान्त उद्वर्त्तन-पूर्वक उष्णोदक स्नान पण करावबु तेनी पद्धती तथा मन्त्रोः— " ॐ पयः –पृ० नमः पयःस्नानं० पयःस्नानान्ते० शु० आच० । १ । " आ प्रमाणे प्रथम दूधथी देवने न्हवाडी पछी शुद्धोदकवडे स्नान करावी आचमनीयोदक समर्पण करी, दधिस्नान करावबु. आ प्रमाणे प्रत्येक द्रव्यना स्नान पछी करवु.

ॐ दधिक्रा० नमः दधिस्नानं० दधिस्नानान्ते० शु० आचमनीय० ।२। ॐ घृतम्मि०नमः घृतस्नानं० घृतस्नानान्ते० शु० आचमनीयं० । ३ । ॐ मधुव्वाता० ।३। नमः मधुस्नानं०

मधुस्नानान्तेशु० शु० न्ते आच० ।४। ॐ अपाᳯरस० नम शर्करास्नान शर्करास्नानान्ते० शु० न्ते आच० ।५। ॐ गन्धद्वारां० नम पष्ठ गन्धोदक० गन्धो० शुद्धो०न्ते आच मनीयं० ।६। ॐ अऽशुनां० नम० उद्वर्त्तनपूर्वकमुष्णोदक स्नान० उष्णोदकस्नानान्ते आचमनीय समर्पयामि " गन्धोदक स्नान कराव्या पछी चन्दन अक्षता पुष्प धूप दीप नैवेद्य पूगीफल ताम्बूल दक्षिणा अने मन्त्रपुष्प,आ उपचारवडे देवनु स्नानाग पूजन करी–" अनेन पञ्चोपचारपूजनेन श्री आराध्यदेवता प्रीयन्ताम् " एवु बोली पूजा समर्पणनो सकल्प करवो

केटलाएक विद्वानो गन्धोदक स्नान थया बराबर " उद्व र्त्तनपूर्वक उष्णोदकस्नान करावी उपर लख्या प्रमाणे पञ्चो पचारपूजन करे छे, अने केटलाएक महाभिषेक स्नान थया पछी उद्वर्त्तन अने उष्णोदक समर्पण करे छे तेम करवा माटे "उष्णोदक स्नान कर्या पछी शीतोदक स्नान कराववा इतर ठकाणे करेला निषेधने" प्रमाण माने छे माटे पोताना सप्रदाय प्रमाणे पक्ष स्वीकारवो उचित छे

केटलाएक पञ्चामृतना पदार्थो जुदा जुदा राखी समर्पण करवाना बदले मिश्र करीनेज समर्पण करे छे एटले मिश्र द्रव्यथीज देवने स्नान करावे छे, ते वखते उपर लख्या प्रमाणे प्रत्येक पदार्थना मन्त्रो न भणता आ एकज मन्त्र भणी पञ्चामृतस्नान करावीये तो हरकत नथी ते मन्त्र एवो —

" ॐ पञ्चनद्यइअर० नमः पञ्चामृतस्ना० पञ्चामृत-स्नानान्ते शुद्धो० शुद्धोदक स्नानान्ते आ०" विगेरे सर्व पूर्व प्रमाणेज समजवुं. आ प्रमाणे विशिष्ट स्नानविधि थया पछी देवने समर्पण करेला पुष्पो पोताना डाबी बाजू तरफ नाखी; संतत जलधारा पडे एवुं अभिषेक पात्र जलपूर्ण करी तेनाथी देवने अभिषेक करवो. अथवा देवने थोडा थोडा पाणी वडे स्नान करावता रही पुरुषसूक्त श्रीसूक्त रुद्राध्याय विगेरेनो यथाशक्ति अवकाशने अनुसरीने पाठ करवो, पैकी पुरुषसूक्तनो पाठ थवोज जोईये. " ॐ सहस्र० देवाः ॥ १६ ॥ " आ प्रमाणे सोळ मंत्रो तथा उपर लख्या पैकी जेटलो पाठ करवो शक्य होय तेटलो पद्धतिसर करी रह्या पछी; शंखमा पाणी भरी ते पाणीवडे देवताओने स्नान कराववुं ते वखते " ॐ इदं विष्णु० स्वाहा " आ मन्त्र बोलवो. केवल शंकरनुं के सूर्यनुं पूजन करवुं होय त्यारे शंखोदक स्नान वर्ज्य छे.

त्यार पछी अभिषेकपात्रमांना देवने अभिषेककरी बाकी रहेला-पाणी वडे देवने स्नान करावतां शान्तिमन्त्रनो पाठ करवो. ते मन्त्रः—" ॐ द्यौः शांति० अमृताभिषेकोऽस्तु ॐ भूर्भुवः स्वः........पञ्चा० स्नानान्ते आच० " पछी देवोने स्वच्छ वस्त्रथी कोरा करी पोताना स्थान उपर स्थापित करवा; अने देवतार्थ एक पात्रमां थोडुं काढी रहे बाकीनुं तुलसी मूल

तेनाथी अथवा अंगुलयअथी पाणी लई गायत्री मंत्रनो उच्चार करतानी साथे नैवेद्यनुं प्रोक्षण करवुं पछी "यथा देहे तथा देवे" आ न्यायने अनुसरि; नैवेद्यपात्रना चोतरफ प्रदक्षिण रीते पाणी फेरवी, अपोशनमाटे एक आचमनी पाणी समर्पण करी; नेत्र मीलित करी अने डाबो हाथ हृदय पासे राखी; जमणा हाथनी पांचे आंगळीओ एकत्र राखी, देवने जमाडिये छीये एवी भावना राखो "अन्ननो परिमल देव तरफ पोहोंचाडवो." ते वखते " ॐ प्राणाय० " मंत्रो बोलवा. नैवेद्य मध्ये प्राशन करवा माटे थोडुं पाणी समर्पण करी फरी नैवेद्य "ॐ प्राणाय०" आ मंत्रोथी समर्पण करवो. नैवेद्य समर्पणान्ते " उत्तरापोशन हस्तप्रक्षालन तथा मुखप्रक्षालन" ने उद्देशीने त्रण वखत थोडुं पाणी तरभाणीमां मुकवुं. अने करोद्वर्तन माटे चंदन समर्पण करवुं. त्यार पछी भोजनांग आचमन आपवुं. आ प्रमाणे नैवेद्य समर्पणनी पद्धती समजवी. नैवेद्य पछीः—

" ॐ यत्पुरुषेण० नमः मुखवासार्थे पूगीफलं० " । १४ । आ मन्त्र वडे पानबिडु सोपारी यथाशक्ति दक्षिणा अने फल एटली अथवा शक्य होय ते वस्तुओ समर्पण करवी. " ॐ इदꣳ विष्णु० नमः उत्तरनीराजनं० " । आ मन्त्र-वडे देवनी आरती उतारवी. कर्पूरार्तिक पण आज वखते समर्पण करवुं. आ उपचार षोडशोपचारना बहारनो छे; तोपण लोकमां रूढ तथा मङ्गलदायक छे, माटे समर्पण करवो.

" ॐ सप्तास्या० नमः प्रदक्षिणां० " । १५ । आ मंत्र वडे त्रण अथवा एक प्रदक्षिणा करवी. " ॐ यज्ञेनयज्ञ० नमः मन्त्रपुष्पां० " । १६ । आ मंत्रवडे देवने मंत्रपुष्पांजली समर्पण करी, त्रण अथवा एक साष्टांग नमस्कार करी; आसन उपर बेसी हाथ जोडी नम्रता पूर्वक प्रार्थना करवी. तेना श्लोको:—" आवाहनं० मन्त्रहीनं० अन्यथा० गतंपापं० " पछी "यस्य स्मृत्या०" एवुं विष्णु स्मरण करी " अनेन यथा०" विगेरे बोली कर्म समाप्ती कन्यानुं तथा ते समर्पण कन्यानुं जल मुकवुं. पछी शंखमां शुद्धोदक भरी " शंखमध्ये० " आ मन्त्र बोली ते शंखने देव उपर प्रदक्षिण रीते फेरवी पोताने ते उदक वडे प्रोक्षित करी लई; त्रण वखत अथवा एक वखत देवतीर्थनुं प्राशन करवुं. ते वखते " अकाल मृत्युहरणं० " आ श्लोक बोलवो. आ प्रमाणे देवपूजा करवानी पद्धति समजवी. ॥

---

## प्रकरण ११ मुं.

### अथ श्रीमद्रुमारमणप्रतिपत्तिः ॥

पूजाप्रतिनिधिरूपा शैवप्रतिपत्ति.

ॐ शिवेन वचसा त्वा गिरिशाच्छा वदामसि। यथा नः सर्वमिज्जगदयक्ष्म ँ सुमना असत् । * ॐ निधनपतये नमः । ॐ निधनपतान्तिकाय नमः । ॐ

ऊर्ध्वाय नमः। ॐ ऊर्ध्वलिङ्गाय नमः। ॐ हिरण्याय नमः। ॐ हिरण्यलिङ्गाय नमः। ॐ सुवर्णाय नमः। ॐ सुवर्णलिङ्गाय नमः। ॐ दिव्याय नमः। ॐ दिव्यलिङ्गाय नमः। ॐ भवाय नमः। ॐ भवलिङ्गाय नमः। ॐ शर्वाय नमः। ॐ शर्वलिङ्गाय नमः। ॐ शिवाय नमः। ॐ शिवलिङ्गाय नमः। ॐ ज्वलाय नमः। ॐ ज्वललिङ्गाय नमः। ॐ आत्माय नमः। ॐ आत्मलिङ्गाय नमः। ॐ परमाय नमः। ॐ परमलिङ्गाय नमः। २२। एतत्सोमस्य सूर्यस्य सर्वलिङ्ग ९ स्थापयति पाणिमन्त्रं पवित्रम्। * ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमोनमः। भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः। * वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः। * अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः। * तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्। * ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्॥ * नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतये उमापतये पशुपतये नमोनमः। * रु। २

सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ।* सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रस्तन्महो नमो नमः ।* विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ * कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शंतमं हृदे ।* सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ।* ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति शिवप्रतिपत्तिः ॥

शिवप्रतिपत्ति क्यारे भणवी.

प्रथम लख्या प्रमाणे देवपूजा कोईपण कारणने लीधे कराती न होय, ( अने आपणा हाथे देवपूजा थवी जोईये एवी मननी भावना होय ) त्यारे आ शिवप्रतिपत्तिनो पाठ भणवो. भणवानी पद्धती एवीः—प्रथम प्रात.सन्ध्यादि नित्य कर्म करी रह्या पछी आसन उपर बेसीने शान्त अने एकाग्र चित्तवडे ईश्वरनुं ध्यान करी, हाथ जोडीने संपूर्ण पाठ भणी जवो एटले पूजा कर्यानुं फल मळी शके छे.

शिवप्रतिपत्तिनुं प्रामाण्य तथा अंत्र संग्रह करवानुं कारण.

आ शिव प्रतिपत्तिनो पाठ परमकृपाळु तथा धर्मोद्धार करनार अवतारभूत श्री. प. प. जगद्गुरु श्री शारदापीठाधीश्वर श्रीमन्माधवतीर्थ स्वामीमहाराज एमणे "कृष्ण यजुर्वेदना

नारायण उपनिषद्मांथी " उध्धृत करी हालना व्यवहार प्रधान लोकोना कल्याण माटे छपावी प्रसिद्ध करेला त्रिकाल सन्ध्याना पुस्तकमां आपेलो छे; तेनी उपयुक्तता तथा सप्रमाणता जोई, आ पुस्तकमां पण तेनो संग्रह करेलो छे.

---

## प्रकरण १२ मुं.

### अथ हंसकल्पोक्तसूर्यनमस्कारविधिः ॥

हंसकल्पोक्त सूर्य नमस्कार.

आचम्य प्राणानायम्य अद्येत्यादि देशकालौ संकीर्त्य मम आत्मनः श्रुति–स्मृति–पुराणोक्त-फल प्राप्त्यर्थं श्रीसवितृसूर्यनारायण देवताप्रीत्यर्थं हंसकल्पोक्तेन विधिना एकावृत्त्या नमस्काराख्यं कर्म करिष्ये। इति संकल्प " ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः ॥ केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ इति ध्यायेत् ॥ ततो मन्त्रान्ते उरसा शिरसा पद्भ्यां पाणिभ्यां जानुभ्यां च युगपद् यथा भूमिस्पर्शो भवेत्तथा नमस्कुर्यात् ॥

ॐ ह्रां हंसः शुचिषत् ह्रां ॐ मित्राय नमः ॥ १ ॥

ॐ ह्रीं वसुरन्तरिक्षसत् ह्रीं ॐ रवये नमः ॥ २ ॥

ॐ ह्रूं होता वेदिषत् ह्रूं ॐ सूर्याय नमः ॥ ३ ॥
ॐ ह्रैं अतिथिर्दुरोणसत् ह्रैं ॐ भानवे नमः ॥ ४ ॥
ॐ ह्रौं नृषत् ह्रौं ॐ खगाय नमः ॥ ५ ॥
ॐ ह्रः वरसत् ह्रः ॐ पूष्णे नमः ॥ ६ ॥
ॐ ह्रां ऋतसत् ह्रां ॐ हिरण्यगर्भाय नमः ॥ ७ ॥
ॐ ह्रीं व्योमसत् ह्रीं ॐ मरीचये नमः ॥ ८ ॥
ॐ ह्रूं अब्जा गोजा ह्रूं ॐ आदित्याय नमः ॥ ९ ॥
ॐ ह्रैं ऋतजाऽअद्रिजा ह्रैं ॐ सवित्रे नमः ॥ १० ॥
ॐ ह्रौं ऋतम् ह्रौं ॐ अर्काय नमः ॥ ११ ॥
ॐ ह्रः बृहत् ह्रः ॐ भास्कराय नमः ॥ १२ ॥

ॐ ह्रां ह्रीं हंसः शुचिषद्वसुरन्तरिक्षसत् ह्रां ह्रीं ॐ मित्ररविभ्यां नमः ॥ १३ ॥ ॐ ह्रूं ह्रैं होता वेदिषदतिथिर्दुरोणसत् ह्रूं ह्रैं ॐ सूर्यभानुभ्यां नमः ॥ १४ ॥ ॐ ह्रौं ह्रः नृषद्वरसत् ह्रौं ह्रः ॐ खगपूषभ्यां नमः ॥ १५ ॥ ॐ ह्रां ह्रीं ऋतसद्व्योमसत् ह्रां ह्रीं ॐ हिरण्यगर्भमरीचिभ्यां नमः ॥ १६ ॥ ॐ ह्रूं ह्रैं अब्जागोजा ऋतजाऽअद्रिजाः ह्रूं ह्रैं ॐ आदित्यसवितृभ्यां नमः ॥१७॥ ॐ ह्रौं ह्रः ऋतबृहत् ह्रौं ह्रः ॐ अर्कभास्कराभ्यां नमः ॥ १८ ॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ह्रां ह्रीं ह्रूं ह्रैं ॐ मित्ररवि

सूर्यभानुभ्यो नमः ॥ १९ ॥ ॐ ऱ्हौं ऱ्हः ऱ्हां ऱ्हीं नृपद्मरसद्हतसव्योमसत् ऱ्हौं ऱ्हः ऱ्हां ऱ्हीं ॐ खगपूषहिरण्यगर्भमरीचिभ्यो नमः ॥ २० ॥ ॐ ऱ्हूं ऱ्हैं ऱ्हौं ऱ्हः अब्जा गोजा ऋतजा अद्रिजा ऋतंबृहत् ऱ्हूं ऱ्हैं ऱ्हौं ऱ्हः ॐ आदित्यसवितृअर्कभास्करेभ्यो नमः ॥ २१ ॥

ॐ ऱ्हां ऱ्हीं ऱ्हूं ऱ्हैं ऱ्हौं ऱ्हः ऱ्हां ऱ्ही ऱ्हूं ऱ्हैं ऱ्हौं ऱ्हः हंसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजा ऋतंबृहत् ऱ्हांऱ्हींऱ्हूंऱ्हैंऱ्हौंऱ्हः ऱ्हांऱ्हींऱ्हूंऱ्हैंऱ्हौंऱ्हः ॐ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्यो नमः ॥२२॥ पुनरेवं द्विः ।२४॥ एवं चतुर्विंशतिनमस्कारान् कृत्वा "अनेन पञ्चावृत्त्या हंसकल्पोक्तविधिना श्रीसूर्यनमस्काराख्येन कर्मणा श्रीसवितृसूर्यनारायणः प्रीयतां न मम । ॐ तत्सद्ब्रह्मार्पणमस्तु ।

इति सूर्यनमस्कार विधिः ॥

हंस कल्पोक्त सूर्य नमस्कारनी पद्धतीः—

प्रथम आचमन अने प्राणायाम करी "अद्यपूर्वोच्चरित० करिष्ये" एवुं बोली सङ्कल्प करवो.

नमस्कारनी माहिती.

पछी "ध्येयः सदा०" आ श्लोकवडे ध्यान करी; प्रत्येक मन्त्र विभागना नमः शब्दनुं उच्चारण करी

